# डाकोरकी ( रणहरपुस्तकालयकी ) सूचीपत्र.

प्रवीन सागर—सटीक बडा अक्षरका,
बडा ( अलंकार ग्रंथ ) .... १२—०
श्रीडाकोर माहात्म्य-भा.टी.सर्वोपयोगी १—०
दोसोबावन वैष्णवकी वार्त्ता-बडा अक्षर
व्रजभाषामें उत्तम ग्लेज कागदकी-४—०
,, तथा रफ कागदकी उत्तम जिल्द.३—०
चौराशी वैष्णवकी वार्त्ता—बडा अक्षर
व्रजभाषामें उत्तम ग्लेज कागदकी. २—०
,, तथा रफ कागदकी उत्तमजिल्द १—८
दोसोबावन वैष्णवकी वार्त्ता-और चो-
राशी वैष्णवकी वार्ता—व्रजभाषामें

बडाअक्षर उत्तम ग्लेज कागद
दोनौ पुस्तककी एक जिल्द ....६—०
,, तथा रफ कागद दोनोंकी एकजिल्द.४—८
भजन रत्नावली मोटी. ( अथवा )
भजनकी पोथी शुद्ध करके
और बढायके छपी बडा अक्षर ग्लेज१—८
,, ,, तथा रफ कागदकी १—४
श्रीरामतापनीयोपनीषद्-भाषाटीका तथा
श्री रामयोपानिषद् सटीका यन्त्रराजके
पूजाका अनुक्रमणिकासहित ....१—०

बावारामदासजी गुरुश्रीगोकुलदासजी ( रणहर पुस्तकालय डाकोर. )

श्रीमतेरामानंदायनमः ॥ अथरामपटलंलिख्यते ॥
ॐपृथ्वित्वयाधृतालोका देवित्वंविष्णुनाधृता ॥ त्वं
चधारयमांदेवि पवित्रंकुरुचासनम् ॥ इत्यासनमंत्रः
॥ १ ॥ ॐ समुद्रमेखलेदेवि पर्वतस्तनमंडले ॥ वि
ष्णुपत्निनमस्तुभ्यं पादपर्शंक्षमस्वमे ॥ इतिपृथ्वीपा
दस्पर्शमंत्रः ॥ २ ॥ ॐ सलिलस्यमुखंदृष्ट्वा विष्णु
रूपंनमोस्तुते ॥ क्रियार्थमहंगृह्णामि आपोदेव्यः पु
नंतुमाम् ॥ इति जलग्रहणमंत्रः ॥ ३ ॥ ॐ धरेत्व
दाश्रितंसर्वंत्वंचैवकेशवाश्रिता ॥ मूत्रंत्यजाम्यहंदे

रा० वि क्षमस्वतत्क्षमावाति ॥ इतिमूत्रोत्सर्जनमंत्रः प०
॥ ४ ॥ ततोबहिर्गच्छेन्नैर्ऋत्यांदिशिगत्वासूर्यंदाक्षि ॥१॥
णेकृत्वावस्त्रेणाशिरःप्रावृत्य यज्ञोपवीतंदक्षिणकर्णोनि
धाय ॥ ॐ तस्यतस्यतुदेवानां भूतप्रेतपिशाचकाः ॥
मलमूत्रंमनुष्याणां ममदोषोनदीयते ॥ इतिमलमूत्रो
त्सर्जनमंत्रः ॥ ५ ॥ ॐ उत्तिष्ठंतुसुराःसर्व्वे यक्षरा
क्षसाकिन्नराः ॥ पिशाचागुह्यकाश्चैव मलमूत्रंकरो
म्यहम् ॥ इति द्वितीयोमलमूत्रोत्सर्जनमंत्रः ॥ ६ ॥ ॥१॥
इतिमंत्रेणतालत्रयंकृत्वाशौचसमये सुरादीनामुच्चा

टनंकुर्यात् ॥ ॐ गुदंचावस्करद्वारं पवित्रौर्निर्मलैर्ज
लैः ॥ धौतंकरतलेनैव गुदाशौचंभवेद्ध्रुवम् ॥ इतिगु
दाशुद्धिमंत्रः ॥ ७ ॥ येनत्वांखनतिब्रह्मा येनत्वांरु
द्रकेशवौ ॥ तेनत्वाहंखनिष्यामि शुद्ध्यर्थंकरपाद
योः ॥ इतिमृत्तिकाहरणमंत्रः ॥ ८ ॥ अश्वक्रांतेरथ
क्रांते विष्णुक्रांतेवसुंधरे ॥ मृत्तिकेहरमेपापं यन्मया
पूर्वसंचितम् ॥ इतिमृत्तिकाशुद्धिमंत्रः ॥ ९ ॥ एका
लिंगेगुदेपंचतथावामकरेदश ॥ उभयोःसप्तदातव्या
चरणौचात्रिभिस्त्रिभिः ॥ इतिगृहस्थस्यप्रमाणम् ॥

ब्रह्मचारिणांद्विगुणम् ॥ वानप्रस्थस्यात्रिगुणम् ॥ सं
न्यासिनांरामभक्तानांचतुर्गुणम् ॥ इतिमृत्तिकानि
यमः ॥ १० ॥ ॐ जलंदहतिपापानि कमंडलायत
नंभवेत् ॥ गंगातोयसमंनित्यंजलपात्रंचशुद्ध्याति ॥
इतितुंबिकापात्रशुद्धिमंत्रः ॥ ११ ॐ जलेचाग्निः
स्थलेचाग्निरग्निश्चवायुमंडले ॥ त्रिभिराग्निप्रकाशैश्च
काष्ठपात्रंचशुद्ध्याति ॥ इतिकाष्ठपात्रशुद्धिमंत्रः
॥ १२ ॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ॥ ब्र
ह्मप्रज्ञांचमेधांच त्वन्नोदेहिवनस्पते ॥ इतिदंतकाष्ठ

च्छेदनमंत्रः ॥ १३ ॥ खदिरश्चकरंजश्च कदंबश्चव
टस्तथा ॥ चिंचिणीवेणुपादश्च आम्रोनिंबस्तथैवच
॥ १ ॥ अपामार्गश्चबिल्वश्च अर्कश्चोदुंबरस्तथा ॥
एतेप्रशस्ताःकथिताः दंतधावनकर्माणि ॥ २ ॥ इति
दंतकाष्ठग्रहणाविधिः ॥ १४ ॥ ॐ दंतरूपमधोगंच
दंतधावनमुत्फलम् ॥ कुर्वंतिचत्रयोदेवाममदोषोनदी
यतां ॥ इतिदंतधावनमंत्रः ॥ १५ ॥ दक्षिणेपाश्चिमे
योवै दंतधावनमाचरेत् ॥ तस्यस्नानफलंनास्ति स
दन्यस्यांसमाचरेत् ॥ १ ॥ अथस्नानविधिः ॥ प्रवा

हेसन्मुखेस्नानं तडागेरविसन्मुखे ॥ कूपेवाप्यांत
थापूर्वं गृहेस्नानंतथोत्तरं ॥ १ ॥ प्रवाहेशतधेनुश्चत
डागेदशधेनुकं ॥ कूपेवाप्यामेकधेनुर्गृहेस्नानंतुकेव
लम् ॥ २ ॥ आचम्यषडंगन्यासंकुर्यात् । ॐ वाक्
ॐ वाक् । ॐ प्राणः ॐ प्राणः । ॐ चक्षुः ॐ
चक्षुः । इतिप्राणायाममलापकर्षणंस्नानंचकृत्वा ना
भिमात्रेजलेस्थित्वा ॥ ॐ विष्णुः ॐ विष्णुः ॐ
विष्णुः इत्याचमनमंत्रः ॥ ॐ आद्यपुराणपुषोत्त
मायब्रह्मणेनमः ॥ ॐ अद्यश्रीब्रह्मणो द्वितीये परा

र्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टावि
शतिमे कलियुगे । जंबुद्वीपे । भरतखंडे आर्याव
र्ते । अमुकसंवत्सरे । अमुकमासे । अमुकपक्षे । अ
मुकतिथौ । अमुकवासरे । अमुकतीर्थे । अमुकक्षे
त्रे । अमुकगोत्रः अमुकदासः । श्रीसीतारामकैंक
र्यसिद्ध्यर्थंप्रातःस्नानमहंकरिष्ये ॥ इतिसंकल्पः ॥
ॐ ब्रह्मनामसहस्रेण शिवनामशतेनच ॥ विष्णो
र्नामसहस्रेणाशिखाबंधंकरोम्यहम् ॥ इति शिखाबं
धनमंत्रः ॥ १६ ॥ ॐ ब्रह्मपुत्रिशिखायांच ब्रह्मदंड

रा० तपस्वानि ॥ सर्व्वदेवनमस्कारः शिखामुक्तिकरोम्य प०
॥४॥ हम् ॥ इतिशिखामुक्तिमंत्रः ॥ १७ ॥ ॐ स्नानंसंध्यांज
पंहोमंध्ययनंदेवतार्चनं ॥ शिखाग्रंथिंविनाकुर्याच्छूद्र
एवनसंशयः ॥ १ ॥ (भोजने शयने संगे तथामा
गेंपिसर्पिणे ॥ व्यवहारे तथाशौचे शिखाग्रंथिंविव
र्जयेत ) ॥ इतिशिखाप्रमाणाविधिः ॥ १८ ॥ जलेप्र
णवात्मकंत्रिकोणंकृत्वाऽष्टदलमंडलंविलिख्य सूर्य्यमं
डलादंकुशमुद्रयासर्वतीर्थान्यावाह्य ॥ ॐ ब्रह्मांडो ॥४॥
दरतीर्थानि करैःस्पृष्टानितेरवे ॥ तेनसत्येनमेदेव

तीर्थंदेहिदिवाकर ॥ १ ॥ ॐगंगेचयमुनेचैव गोदाव
रिसरस्वति ॥ नर्मदेसिंधुकावेरि जलेस्मिन्सन्निधिं
कुरु॥इतिस्नानमंत्रः॥ १९ ॥ ॐ नमोभगवतेरघुनंद
नाय रक्षोघ्नविशदायमधुरप्रसन्नवदनायामिततेजसे
बलायरामायाविष्णवेनमः ॥ ॐक्लींतेजसेरांतारक
ब्रह्मस्वाहा इतिमंत्रेण वामहस्तेनाच्छादितं दक्षिणह
स्तस्थं जलं सकृदभिमंत्र्य दक्षिणनासारंध्रेणाघ्राय
तज्जलंशरीरांतर्गतं सर्वंलुलुपमाक्षालितं तत्कृष्णव
र्णंध्यात्वा वामनासानिर्गतंपुनर्हस्तमागतमितिवि

रा० भाव्य नामभागे कल्पितायां वज्राशिलायां ॐ रःअ प०
॥५॥ स्त्रायफट् इतिमंत्रेण गाढमास्फालयेत इत्यघमर्षणं
॥ २० ॥ ततोहस्तौ प्रक्षाल्याचम्य सूर्य्यमंडले इष्ट
देवस्यरूपंध्यायेत ॥ अमुकदेवतायैनमः ॥ इति
तद्गायत्र्यात्रिवारंजलंनिक्षिपेत् ततोगायत्रींजपेत् ॥
ॐदाशरथयाविद्महे ॥ सीतावल्लभायधीमहि ॥ त
न्नोरामःप्रचोदयात् ॥ ॐ दाशरथायअंगुष्ठाभ्यांन
मः ॥ ॐविद्महेतर्जनीभ्यांनमः ॥ ॐसीतावल्लभाय ॥५॥
मध्यमाभ्यांनमः ॥ ॐ धीमहिअनामिकाभ्यांन

मः ॥ ॐ तन्नोरामःकनिष्ठिकाभ्यानमः ॥ ॐ प्रचोद
यात्करतलकरपृष्ठाभ्यांनमः ॥ इतिकरन्यासः ॥
ॐ दाशरथायहृदयायनमः ॥ ॐ विद्महेशिरसेस्वा
हा ॥ ॐ सीतावल्लभायशिखायैवषट् ॥ ॐ धीमहि
कवचायहुं ॥ ॐ तन्नोरामःनेत्राभ्यांवौषट् । ॐ प्रचो
दयात्अस्त्रायफट् ॥ इतिहृदयादिन्यासः ॥ ॐ ह्रींह्रीं
रांरामायनमः ॥ इतिरामगायत्रीजपः ॥ अथरा
मगायत्रीमंत्रजपः ॥ ॐ क्लांक्लींक्लूंक्लैंक्लौंक्लः ॥ ॐ
क्लांअंगुष्ठाभ्यानमः ॥ ॐ क्लींतर्जनीभ्यांनमः ॥ ॐ

 


क्लूंमध्यमाभ्यांनमः ॥ ॐक्लैंअनामिकाभ्यांनमः ॥ ॐ
क्लौंकनिष्ठिकाभ्यांनमः ॥ ॐक्लः करतलकरपृ
ष्ठाभ्यांनमः ॥ इतिकरन्यासः ॥ ॐक्लांहृदयायनमः ॥
ॐक्लींशिरसेस्वाहा ॥ ॐक्लूंशिखायैवौषट् ॥ ॐक्लैं
कवचायहुं ॥ ॐ क्लौंनेत्राभ्यांवौषट् ॥ ॐक्लःअस्त्राय
फट् ॥ इतिहृदयादिन्यासः ॥ इतिरामगायत्रीमंत्र
जपः ॥ ततोमंत्रन्यासः ॥ ॐब्रह्मरंध्रेरांनमः ॥ ॐ
भ्रुवोर्मध्येरांनमः ॐहृदिमांनमः ॥ ॐनाभौयंन
मः ॥ ॐलिंगेनंनमः ॥ ॐपादयोःमःनमः ॥ इति

अक्षरन्यासः ॥ अथध्यानम् ॥ ॐ नीलाम्भोधरकां
तिकायमनिशं वीरासनाध्यासितं मुद्रांज्ञानमयीं
दधानमपरं हस्तांबुजंजानुनि ॥ सीतांपार्श्वगतांसरो
रुहकरां विद्युन्निभांराघवं पश्यंतंमुकुटांगदादिवि
विधैः कल्पोज्वलांगंभजे ॥ इतिध्यानम् ॥ अथच
तुःसंप्रदायस्यधामक्षेत्राणिलिख्यंते ॥ ॐश्रीरामा
नन्दगुरुप्रमाणअयोध्याधर्मशाला ॥ चित्रकूटसुख
विलास ॥ गोदावरीप्रदक्षिणा ॥ क्षेत्रधनुषतीर्थ ॥ रा
मनाथधाम ॥ अच्युतगोत्र ॥ शुक्लवर्ण ॥ सीताइष्ट ॥

जानकीमंत्र ॥ ॐ क्लीं रैं रैं रैं जानकीनाथायनमः ॥ इ
तिद्वादशाक्षरमंत्रः ॥ ॐ रामउपासीउपासनामंत्रः ॥
ॐ क्लीं रां रां रामायनमः ॥ इत्यष्टाक्षरमंत्रः ॥ अथयुग
लमंत्रः ॥ ॐ क्लीं ह्रीं ह्रीं ह्रीं सीतावल्लभायनमः ॥ इति
द्वादशाक्षरमंत्रः ॥ राघवानंदमहाप्रसादमंत्रः ॥
ॐ अन्नंब्रह्म रसोविष्णुर्भोक्तादेवोमहेश्वरः ॥ एवं
ज्ञात्वातुयोभुंक्तेअन्नदोषैर्नलिप्यते ॥ अथरामतार
कमंत्रः ॥ ॐ क्लीं तेजसे रां तारकब्रह्मस्वाहा ॥ इतिद्वा
दशाक्षरमंत्रः ॥ अनंतशारवा ॥ सामीप्यमुक्ति ॥ श्र

वणद्वार ॥ लक्ष्मीआचार्य्य ॥ विश्वामित्रऋषिः ॥
योगवासिष्ठमुनिः ॥ हनुमान्देवता ॥ हनुमान्मंत्रः ॥
ॐ-ह्रां-ह्रीं-ह्रूं-ह्रैं-ह्रौं-ह्रः ॥ इतिषडक्षरमंत्रः ॥ राम
गायत्री ॥ ऋग्वेद ॥ हरिनामअहार ॥ विष्वक्सेनपा
र्षद ॥ कमलादेवी ॥ सूर्य्यवंशी ॥ शुद्धासिंहासन ॥ कि
रीटमुकुट ॥ धनुषबाण ॥ ऊर्ध्वपुंड्रतिलक ॥ श्रीसंप्र
दाय ॥ वैजयंतीमाला ॥ इतिश्रीरामानंदवैष्णवाः
॥ १ ॥ संस्कृतेपि। शतानंदउवाच ॥ अथवक्ष्येश्रीगुरू
णांसंप्रदायचतुष्टयं ॥ तत्रापिप्रथमंश्रीमद्रामानुजगु

रोःक्रमात ॥१॥ रामानुजगुरुः किंवा ध्यानस्थानंकि मुच्यते ॥ किंक्षेत्रंकिंचतीर्थंस्यात् किंधामाथप्रकीर्तितम् ॥ २ ॥ तथासुखविलासःकःकिमिष्टंकाउपासना॥ कादीक्षाःकिश्चनामस्यान्मंत्रंकिंवाऋषिश्चकः ॥ ३ ॥ देवताकाचकथितावैष्णवाः कइहोदिताः ॥ काशिखा किंचगोत्रं स्यात्काशाखा वसनंतुकिम् ॥ ४ ॥ मेखला अंचलाकंथा वाथसूत्रंकथंभवेत् ॥ किमासनं चकःसंगः कोगुणश्चप्रकीर्तितः ॥ ५ ॥ काभिक्षा किंचपात्रंस्यात्कामुद्रातिलकःकथम् ॥ आनंदः कश्चकः

शंखः कामालाकिंच तंत्रकम् ॥ ६ ॥ किंचातिगु
ह्यंकाभक्तिः किंगुह्यंकाथितंबुधैः ॥ एतेषांप्रश्नराशीना
मुत्तरं कथयप्रभो ॥ ७ ॥ सनत्कुमारउवाच ॥ ध्या
नस्थानंचशिरसिसहस्रदलपंकजे ॥ अयोध्यानग
रीक्षेत्रंधनुःकोटिश्चतीर्थकम् ॥ ८ ॥ रामनाथाख्य
कंधामबहुभिःपरिकीर्तितं ॥ तथासुखाविलासःस्या
च्चित्रकूटाख्यपर्व्वतं ॥ ९ ॥ इष्टंविदेहतनयारघुना
थउपासना ॥ ऋग्वेदस्तुचवेदः स्यान्नामश्रीहरिना
मकम् ॥ १० ॥ षडक्षरं महामंत्रं कथितंरामतारक

म् ॥ योगवासिष्ठकंनामऋषिश्चकौशिकोमुनिः ॥११॥
॥१॥ देवताहनुमान्प्रोक्तावैष्णवश्चश्रीवैष्णवः ॥ शिखावै
स्वर्गनगरीगोत्रंचाच्युतगोत्रकम् ॥ १२ ॥ शाखाअनंत
शाखाचवसनंशुक्लमेवच ॥ कौपीनंचद्वयंकुर्यात्प्र
त्येकंद्वादशांगुलम् ॥ १३ ॥ मेखलाकथिताह्यत्राति
स्रोवैमुंजमेखला ॥ अंचलाशुक्लवस्त्रंस्याद्धस्तद्वयप्र
माणतः ॥ १४ ॥ पंचहस्तप्रमाणंचसप्तडोरकशोभि
नी ॥ प्रशस्ताकथिताकंथाशुक्लवस्त्रचतुष्टयम् ॥ १५ ॥ ॥१॥
सार्द्धहस्तद्वयंकुर्याद्वामसूत्रैःसितैर्गुणैः ॥ आसनं

कथितंचात्र शुक्लकृष्णाजिनासनम् ॥ १६ ॥ विष्णूपा
सकसंगश्चसंगःसत्वगुणोगुणः ॥ तथाभिक्षाशुक्लाभि
क्षापात्रंचालाबुपात्रकम् ॥ १७ ॥ अत्रमुद्रातप्तमुद्राशं
खचक्रगदादिकम् ॥ ऊर्ध्वपुंड्रंचतिलकंद्वादशांगेषुवि
न्यसेत् ॥ १८ ॥ आनंदोविजयानंदःशंखश्चोदधिसं
भवः ॥ मालाचक्रांकतुलस्याःशतमष्टोत्तरंतथा
॥ १९ ॥ अगस्त्यसंहितातंत्रंरामतत्वंतुगोपितम् ॥
भक्तिस्तत्पादसेवात्रमनोवाक्कायकर्मभिः ॥ २० ॥
गुह्यंश्रीवैष्णवानांचचरणामृतसेवनम् ॥ एवंयःसंप्र

रा० दायीस्यात्सहिवैष्णवउच्यते ॥ २१ ॥ इतिद्वितीयं प०
॥१०॥ धामक्षेत्रं ॥ श्रीरामानुजसंप्रदायन्वितरांचेतस्स
तांसर्वदा योध्याधर्मविधायिनी शुभतरा शालाविला
सस्तुसः ॥ सश्रयः शुभाचित्रकूटशिखरीगोदावरी
संक्रमः श्रीरंगाख्यसुधामकंशुभतरं क्षेत्रंधनुस्तीर्थक
म् ॥ १ ॥ गोत्रंचाच्युतसंज्ञकंसुशुभदंशुक्लश्चवर्णोभवे
च्छ्रीमद्रामउपास्यएव भगवान्निष्ठा तु सीतासदा ॥
आचार्याः कमलोर्ध्वपुंड्रतिलकं मंत्रंपरंतारकं, वि ॥१०॥
श्वामित्रऋषिर्वसिष्ठमुनिकोदेवोभवेन्मारुतिः ॥ २ ॥

सामीप्यंशुभमुक्तिरेवपरमाशाखात्वनन्तामता, श्री
रामात्रिपादिर्मतातुकमलादेवीतुपूज्योच्यते ॥ ऋग्वे
दोहरिनामकंत्वशनकंद्वारंतुकर्णमतं विष्वक्सेनःसु
पार्षदोभवतुवैश्रीवैष्णवानांसदा ॥ ३ ॥ ॥ इतितृती
यंधामक्षेत्रं ॥ ३ ॥ भाषा ॥ श्रींनिम्बादित्यगुरुप्रमाण
मथुराधर्मशाला ॥ क्षेत्रगोमती ॥ वृन्दावनसुखवि
लास ॥ गोवर्धनपरिक्रमा ॥ द्वारावतीधाम ॥ रु
क्मिणीइष्ट ॥ गोपालउपासी ॥ वंशगोपालमंत्रः ॥ ॐ
क्लींगोपालायगोचरायवंशशब्दायनमोनमः ॥ गोपा

लगायत्री ॥ हंसशाखा ॥ सारूप्यमुक्ति ॥ नासिका
द्वार ॥ सनकादिकआचार्य्य ॥ नारदमुनि ॥ दूर्वा
साऋषि ॥ गरुडमंत्रः । ॐ ग्रांग्रींग्रूंग्रैंग्रौंग्रः ॥
इतिगरुडमंत्रः ॥ सामवेद ॥ श्रीभटमहाप्रसाद ॥
अच्युतगोत्र ॥ शुक्लवर्ण ॥ हरिनामअहार ॥ सु
षेणपार्षद ॥ निम्बादित्यवैष्णवाः ॥ ४ ॥ संस्कृते
पि ॥ निम्बादित्यानुयायिनांसर्वदासुखदायिनी ॥
मथुराधर्मशालास्यात्क्षेत्रंतुगोमतीमतं ॥ १ ॥ वृन्दा
वनविलासः स्याद्गोवर्धनपरिभ्रमः ॥ द्वारावतीसु

धामस्यादिष्टातुरुक्मिणीभवेत् ॥ २ ॥ श्रीगोपालउपा
स्यश्चवंशगोपालमंत्रकः ॥ हंसशाखासारूप्यमुक्ति
र्गोपालत्रिपदिर्मता ॥ ३ ॥ सनकादिकआचार्यो
द्वारंतुनासिकाभवेत् ॥ मुनिस्तुनारदश्चैवदुर्वासाश्च
र्षिरुच्यते ॥ ४ ॥ गरुडोदेवताचैवसामवेदस्तथैवच ॥
शुक्लवर्णोऽच्युतंगोत्रमहारोहरिनामकम् ॥ ५ ॥ सुषेणः
पार्षदश्चैववैष्णवानांतुसर्वदा ॥ ६ ॥ इतिधामक्षेत्रम्
॥ ५ ॥ भाषा ॥ ॐ श्रीविष्णुस्वामीगुरुप्रमाण ॥ विष्णुकां
चीधर्मशाला ॥ मार्कंडेयक्षेत्र ॥ इंद्रद्युम्नसुखविलास ॥

रा० सायुज्यमुक्ति ॥ लक्ष्मीइष्ट ॥ जगन्नाथउपासी ॥ प०
॥१२॥ तुलसीमंत्रः ॥ ॐ क्लींवृन्दायैनमः त्रिपुरारीशा
खा ॥ वामदेवआचार्य्य ॥ पुरुषोत्तमधाम ॥ नेत्र
द्वार ॥ हरिनामअहार ॥ सुनंदपार्षद ॥ यजुर्वेद ॥
अच्युतगोत्र ॥ शुक्लवर्ण ॥ वटेकृष्णपरिक्रमा ॥ ज
लबिंबऋषिः ॥ नाद्यादेवता ॥ इतिश्रीविष्णुस्वामी
वैष्णवाः ॥ ६ ॥ संस्कृतेपि ॥ विष्णुस्वाम्यनुयायिनां
सर्वदाशुभदायिनी ॥ विष्णुकांचीधर्मशालामार्कंडं ॥१२॥
क्षेत्रकंमतम् ॥ १ ॥ इंद्रद्युम्नाविलासःस्यात् सायुज्यं

मुक्तिरुच्यते ॥ जगन्नाथउपास्यस्स्यादिष्टातुकम
लातथा ॥ २ ॥ श्रीतुलसीमंत्रः परमः त्रिपुरारिःशा
खोच्यते ॥ आचार्य्योवामदेवश्चद्वारंतुनयनंमतम्
॥ ३ ॥ पुरुषोत्तमाख्यंधामचाहारोहरिनामकम् ॥
सुनंदः पार्षदः प्रोक्तोयजुर्वेदस्तथैवच ॥ ४ ॥ शु
क्लोवर्णोऽच्युतंगोत्रंवटेकृष्णपरिश्रमः ॥ जलबिंब
श्चर्षिर्भवेन्नांदिकादेवतातथा ॥ ५ ॥ एतास्संज्ञाःशु
भतरावैष्णवानांतुसर्वदा ॥ ६ ॥ इतिधामक्षेत्रं ॥ ७ ॥
ॐ श्रीमाधवाचार्य्यगुरुप्रमाण ॥ अवंतिकापुरी

रा० धर्मशाला ॥ बद्रिकाश्रमधाम ॥ नैमिषारण्यसुखवि प०
लास ॥ अंगपातक्षेत्र ॥ सावित्रीइष्ट ॥ ब्रह्मउपासी ॥
॥१३॥ विष्णुहंसमंत्र ॥ हंसदेवता ॥ सालोक्यमुक्ति ॥ मु
खद्वार ॥ त्रिकालआचार्य्य ॥ अद्वैतशाखा ॥ अच्यु
तगोत्र ॥ शुक्लवर्ण ॥हरिनामअहार ॥ परमहंसऋषि ॥
नंदपार्षद ॥ अथर्ववेद ॥ इतिश्रीमाधवाचार्यवैष्ण
वाः ॥ ८ ॥ संस्कृतेपि ॥ श्रीमाधवानुयायिनांसर्वदा
सुखदायिनी ॥ अवंतिकाधर्मशालाक्षेत्रंचैवांगपात ॥१३॥
कम् ॥ १ ॥ श्रीबद्रिकाश्रमंधामहंसस्तुदेवतामता ॥

विलासोनैमिषारण्यामिष्टातुसावित्रीमाता ॥ २ ॥ उ
पास्यंपरमंब्रह्मसालोक्यंमुक्तिरेवच ॥ श्रीविष्णुहंस
मंत्रोद्वारंतुवदनंभवेत् ॥ ३ ॥ अद्वैतशाखासुखदाहा
रस्तुहरिनामकं ॥ शुक्लोवर्णोच्युतंगोत्रमाचार्य्य
स्त्रिकालोमतः ॥ ४ ॥ नंदाख्यःपार्षदश्चैवाथर्ववेद
स्तथैवच ॥ ऋषिःश्रीपरमहंसो वैष्णवानांतुसर्वदा
॥ ५ ॥ इतिधामक्षेत्रं ॥ ६ ॥ चतुरोभ्राता ॥ द्रावि
डनगरी ॥ मातावरुणावती ॥ पिताअगस्त्यमुनि ॥
गुरुधर्मऋषि ॥ स्वर्गनगरी ॥ अच्युतगोत्र॥शुक्लवर्ण ॥

रा० अनंतशाखा ॥ श्वसनवेद ॥ निष्कामभिक्षा ॥ रं प०
॥१४॥ गनाथधाम ॥ तोताद्रिसुखविलास ॥ मैलकोटापा
ट ॥ हरिनामअहार ॥ परमबाद्रिकाश्रमक्षेत्र ॥ मठ
वैकुंठ ॥ लक्ष्मीदेवी ॥ नारायणदेवता ॥ पूजाअक्षय
वटकी ॥ शुक्लसंप्रदाय ॥ उखलअखाडा ॥ शून्यस्था
न ॥ सुमेरुपरिक्रमा ॥ बीजमंत्रः ॥ इतिचतुस्संप्रदायि
नां धामक्षेत्रम् ॥ १० ॥ संस्कृतेपि ॥ चत्वारोभ्रात
रश्चैवजगातिधर्मस्थापकाः ॥ मातावारुणवंतीस्यात् ॥१४॥
पिताऽगरुत्यस्तथैवच ॥ १ ॥ ऋषिश्चगुरुधर्मस्यात्

स्वर्नगरीतथैवच ॥ अच्युताख्यंसुगोत्रंस्याच्छुक्लवर्ण
स्तथैवच ॥ २ ॥अनन्ताख्याशाखास्यात्श्वसनाख्य
श्चवेदोवै ॥ निष्कामाख्याचभिक्षास्याद्धामकंरंगना
थकं ॥ ३ ॥ तोताद्रिसुखविलासोमैलकोटाख्यपाटकं ॥
आहारोहरिनामश्चक्षेत्रंचबद्रिकाश्रमं ॥ ४ ॥ देवोना
रायणोभवेद्देवीलक्ष्मीस्तथैवच ॥ वैकुंठमंदिरंचैव
अक्षयवटस्यपूजनं ॥ ५ ॥ शुक्लाख्यःसंप्रदायश्चाऽऽखा
डाख्यंस्यादुखलाख्यकं ॥ शून्यंस्थानंबीजमंत्रःसुमे
रोराभ्रमोभवेत ॥ ६ ॥ इतिचतुस्संप्रदायानुगानांधा

मक्षेत्रंसंपूर्णम् ॥ ११॥ भद्ररूपन्तप्तचक्रन्तुलसीगोपी
मृत्तिका ॥ रामकृष्णमन्त्रश्चशिखासूत्रकमण्डलुः ॥
धौतवस्त्रंगुरोर्वाक्यंदशलक्षणवैष्णवाः ॥ अथतिलक
विधिः । ॐ ललाटेकेशवन्ध्यायेन्नारायणमथोदरे ॥
वक्षःस्थलेमाधवंचगोविन्दंकंठकूबरे ॥ १॥ विष्णुंचद
क्षिणेकुक्षौतद्बाहौमधुसूदनं ॥ त्रिविक्रमंकंधेरतुवाम
नंवामपार्श्वके ॥ २ ॥ श्रीधरंबाहुकेवामेहृषीकेशंतुकं
धरे ॥ पृष्ठेतुपद्मनाभंचत्रिकंदामोदरंन्यसेत ॥ ३ ॥
इतितिलकंकृत्वा ॥ अथभूतशुद्धिः ॥ ॐ प्रातरु

त्थायशौचंस्नानंचकृत्वा ॥ मूलमंत्रांत्रिवारंपठित्वा ॥ ॥ आचम्य ॥ ॐ कारमध्ये स्वगुरुं श्रीरामचंद्रंच ध्यात्वा ॥ भूतशुद्धिंकृत्वा ॥ यंरंलंवंशंहं सोहंयं वायुबीजेनषोडशवारंजपन् पापपुरुषंविशोषयेत् ॥ रंअग्निबीजेनचतुःषष्टिवारंजपन् पापपुरुषंप्रज्वालयेत् ॥ वंवरुणबीजेनभस्मोच्चाटनंकुर्यात् शंचद्रबीजेनामृतवृष्टिकरणंतेनशरीरोत्पत्तिंविभाव्य लंपृथ्वीबीजेनदेहंदृढंकृत्वा ॥ हंआकाशबीजेनदेहसुषिराणि भावयेत् ॥ एकैकंबीजंपूरक १६ कुंभक ६४ रेचकैः ३२

षट्बीजैः प्राणायामद्वयं कुर्यात् ॥ इति भूतशु



द्धिः ॥ द्विप्रणवमध्येरांबीजं हस्तमध्येलिखितंहस्त

संपुटंकृत्वा ॥ मूलमंत्रंसप्तवारंजपित्वा ॥ द्वाद

शतिलकंकुर्यात् ॥ ॐ रांरामायनमः ॥ लला

टे रांरां नाभौ रांरां हृदि रांरां कंठे रांरां दक्षिणकुक्षौ

रांरां दक्षिणबाहौ रांरां दक्षिणस्कंधे रांरां वामकुक्षौ

रांरां वामबाहौ रांरां वामस्कंधे रांरां कटिपृष्ठे रांरां

कंठपृष्ठे रांरां हस्तौ प्रक्षाल्यमूर्द्धनिसेचनं कुर्यात् ॥ 

इतितिलकं ॥ ॐ रांरां ॐ रांरां ॐ रांरां इत्या

चमनमंत्रः ॥ ॐ रांरांदक्षिणकरंप्रक्षाल्य ॥ ॐ रारां
वामकरंप्रक्षाल्य । ॐ रांरांमार्जनं ॥ ॐ रारांपाद
योः ॥ ॐ रांरांनाभौ । ॐ रांरांशिरशि । ॐ रांरांभुजे
ॐ रांरांमुखे ॥ ॐ रांरांदक्षिणनासापुटे ॥ ॐ रांरां
वामनासापुटे । ॐ रांरांदक्षिणनेत्रे ॥ ॐ रांरांवामनेत्रे
॥ ॐ रांरांदक्षिणकर्णे ॥ ॐ रांरांवामकर्णे ॥ रांरांद
क्षिणस्कंधे ॥ ॐ रांरांवामस्कंधे ॥ ॐ रांरांइत्याचम
नं ॥ अथप्राणप्रातिष्ठा ॥ ॐ रांरांबीजंषोडशवारं जप
न्पूरकं ॥ १६ ॥ ॐ राराचतुःषष्टिवरं जपान् कुं

भकं ६४ ॥ ॐ रांरांबीजंद्वात्रिंशद्वारं जपन् रेच
 कं ३२ ॥ इतिप्राणायामः ॐ सोहंहंसःममप्राण
इहास्थितः ॥ ममजीवइहास्थितः ॥ ममसर्वेंद्रियाणि
वाङ्मनश्चक्षुश्रोत्रघ्राणप्राण इहागत्य सुखं चिरं ति
ष्ठंतुस्वाहा ॥ इतिप्राणप्रतिष्ठा ॥ मूलमंत्रेणसर्वांग
न्यासं कुर्यात् । ॐ अस्यश्रीषडक्षरस्यश्रीराममंत्र
स्यश्रीजानकीऋषिर्गायत्रीछंदः ॥ श्रीरामोदेवतारां
बीजं नमःशक्तिः रामायकीलकं श्रीसीतारामप्रीत्यर्थे 
जपेविनियोगः ॥ इतिसंकल्पः ॥ अत्राचमनंप्राणाया

मंचकारयेत् ॥ ॐजानकीऋषयेनमः शिरासि ॥ गाय
त्रीछंदसेनमः मुखे ॥ श्रीरामदेवतायैनमः हृदि । रां
बीजायनमःगुह्ये ॥ नमःशक्तयेनमः पादयोः॥ रामाय
कीलकायनमः सर्वांगे ॥ इतिऋष्यादिन्यासः ॥ ॐ
रांरींरूंरैंरौंरः ॥ ॐ रां अंगुष्ठाभ्यांनमः ॥ ॐ रींतर्ज
नीभ्यांनमः ॥ ॐ रूंमध्यमाभ्यांनमः ॥ ॐ रैंअना
मिकाभ्यांनमः ॥ ॐ रौंकानिष्ठिकाभ्यांनमः॥ ॐ रः
करतलकरपृष्ठाभ्यांनमः ॥ इतिकरन्यासः ॥ ॐरां
हृदयायनमः॥ ॐ: रींशिरसेस्वाहा ॥ ॐ रूंशिखा

यैवषट् ॥ ॐ रैंकवचायहुं ॥ ॐ रौंनेत्राभ्यांवौष
ट् ॥ ॐ रः अस्त्रायफट् ॥ इत्यंगन्यासः ॥ ततःताल
त्रयंकृत्वामूलमंत्रेणदशादिग्वंधनंकृत्वा ॥ ॐ रां र
क्षतुप्राच्यां ॥ ॐ रांरक्षतुदक्षिणे ॥ ॐ रांरक्षतुप्र
तीच्यां ॥ ॐ रांरक्षतुउदीच्यां ॥ ॐ रांरक्षतुआग्ने
य्यां ॥ ॐ रांरक्षतुनैर्ऋत्यां ॥ ॐ रांरक्षतुवायव्यां
ॐ रांरक्षतुईशान्यां ॥ ॐ रांरक्षतुऊर्ध्वं ॥ ॐ रांरक्ष
तुअधोमां ॥ ॥ इतिदिग्वंधनम् ॥ ॐ रांनमोमू ॥१८॥
र्ध्नि ॥ रामायनमः नाभौ ॥ ॐ नमोनमः पाद

योः ॥ इतिपदन्यासः ॥ ॐ रांनमोमूर्द्ध्नि ॥ ॐ रां
नमोभ्रुवोर्मध्यं ॥ ॐ मांनमोहृदि ॥ ॐ यंनमोना
भौ ॥ ॐ नंनमोगुह्ये ॥ ॐमः नमःपादयोः ॥ इति
अक्षरन्यासः ॥ अथध्यानं ॥ रामरत्नमहंवंदेचि
त्रकूटपतिंहरिम् ॥ कोशल्याशुक्तिसंभूतं जानकीकं
ठभूषणम् ॥ ततःषट्सहस्रं राममंत्रजापं कुर्यात्
प्रतिदिनं ॥ अथ श्रीनारद पंचरात्रोक्त पूजामंत्रः ॥
ॐ त्वं पुरासागरोत्पन्नो विष्णुनाविधृतः करे ॥
नमंति सर्वभूतानि पांचजन्यनमोस्तु ते ॥ १ ॥

इतिशंखप्रार्थनामंत्रः ॥ १ ॥ ॐ सर्ववाद्यमयीघंटा दे
वदेवस्यवल्लभा ॥ त्वान्निनादेनसर्व्वेषां शुभंभवति
शोभने ॥ इतिगरुडघंटामंत्रः ॥ २ ॥ ॐ ग्रांग्रींग्रूं
ग्रैंग्रौंग्रः ॥ ॐ उतिष्ठोत्तिष्ठश्रीराम उत्तिष्ठ जानकी
पते ॥ उत्तिष्ठकमलाकांतत्रैलोक्यंमंगलंकुरु ॥ ३ ॥
ॐ उत्तिष्ठोत्तिष्ठभद्रन्ते उत्तिष्ठजगदीश्वर ॥ त्वयिउ
त्थायमानेतुउत्थितंभुवनत्रयं ॥ इतिउत्थापनमंत्रः
॥ ४ ॥ ॐ आगच्छभगवान्विष्णो स्वस्थानात्परमे
श्वर ॥ अहंपूजांकरिष्यामिसदात्वंसन्मुखोभव ॥ इ

त्यावाहनमंत्रः ॥ ५ ॥ ॐ सिंहासनेसुवर्णस्य नाना
रत्नोपशोभिते ॥ अनन्तफणपत्रस्थउपाविश्यासने
प्रभो ॥ इत्यासनमंत्रः ॥ ६ ॥ ॐ स्नानार्थंस्वच्छ
तोयानिगंधपुष्पयुतानिच ॥ पाद्यंगृहाणदेवेशभक्ता
नुग्रहकारक ॥ इतिपाद्यमंत्रः ॥ ७ ॥ ॐ शंखतोयंस
मानीतं गंधपुष्पादिवासितं ॥ अर्घ्यंगृहाणदेवेशप्री
त्यर्थंमेसदाप्रभो ॥ इत्यर्घमंत्रः ॥ ८ ॥ ॐ दधिदु
ग्धंमधुसर्पिः शर्कराचतथाप्रभो ॥ समर्पयामिदेवेश
प्रीत्यर्थंप्रतिगृह्यतां ॥ इतिमधुपर्कादिस्नानमंत्रः ॥ ९ ॥

ॐ गंगासरस्वतीतापी पयोष्णीनर्मदार्कजा ॥ तज्जलैःस्नापितोदेव तेनशांतिंकुरुष्वमे ॥ इतिस्नानमंत्रः ॥ १० ॥ ॐ गंगातोयंसमानीतंसुवर्णकलशोद्धृतं ॥ आचामंदेवदेवेश प्रीत्यर्थंप्रतिगृह्यतां ॥ इत्याचमनमंत्रः ॥ ११ ॥ ॐ शीतवातोष्णसंत्राणं परलज्जानिवारणं ॥ सुवेषंधारयेद्यस्मात् वासोऽयंप्रतिगृह्यतां ॥ इतिवस्त्रमंत्रः ॥ १२ ॥ ॐ ब्रह्मणानिर्मितंसूत्रं विष्णुग्रंथिसमन्वितं ॥ इदंयज्ञोपवीतंच गृह्यतांतुजनार्दन ॥ इतियज्ञोपवीतमंत्रः ॥ १३ ॥ ॐ विष्णुःॐवि

ष्णुः ॐ विष्णुः। इत्याचमनमंत्रः ॥ १४ ॥ॐ किरीट
कुण्डलंहारकंकणांगदनूपुरं ॥ नानारत्नमयंअंगेभू
षणंप्रतिगृह्यतां ॥ इतिभूषणमंत्रः ॥ १५ ॥ मलयाच
लसंभूतं शीतमानंदवर्द्धनं ॥ काश्मीरघनसाराढ्यंचं
दनंप्रतिगृह्यतां ॥ इतिचंदनमंत्रः ॥१६॥ यथासीताच
दयिता तथाचमंजरीहरे ॥ गृहाण तुलसींतस्माच्चं
दनेनतुमिश्रितां ॥ इतितुलसीसमर्पणमंत्रः॥ १७ ॥ॐ
नमःश्रीरामचंद्रायनमोमंगलमूर्त्तये ॥ उत्तरीयमिदंव
स्त्रंगृहाणकरुणानिधे ॥ इतिउत्तरीयवस्त्रमंत्रः ॥ १८॥

ॐविष्णुः ॐविष्णुः ॐविष्णुः ॥ इत्याचमनं ॥ कोम
॥२१॥ लानिसुगंधीनिमंजरीसंयुतानिच ॥ तुलस्याःसुदला
न्येव गृहाणरघुवल्लभ ॥ इतितुलसीसमर्पणमंत्रः॥१९॥
ॐ नानाविधानिपुष्पाणि ऋतुकालोद्भवानिच ॥
मयार्पितानिसर्वाणि पूजार्थंप्रतिगृह्यतां ॥ इतिपु
ष्पमंत्रः ॥ २० ॥ ॐ वनस्पतिरसोत्पन्नःसुगंधाढ्यो
मनोहरः ॥ आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यतां ॥
इतिधूपमंत्रः ॥ २१ ॥ ॐ घृतवर्तिसमायुक्तं तथाक ॥२१॥
र्पूरसंयुतं ॥ दीपंगृहाणदेवेश त्रैलोक्यतिमिरापहं ॥

इतिदीपमंत्रः ॥ २२ ॥ ॐ अन्नंचतुर्विधंस्वादुरसैः
षड्भिःसमन्वितं ॥ भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृ
ह्यतां ॥ इतिनैवेद्यमंत्रः ॥ २३ ॥ शीतलंस्वादुशुद्धंच
परातृप्तिकरंजलं ॥ समस्तदेवदेवेशप्रीत्यर्थंप्रतिगृह्य
तां ॥ इतिजलसमर्पणमंत्रः ॥ २४ ॥ ॐ विष्णुः ॐ वि
ष्णुः ॐ विष्णुः ॥ इत्याचमनमंत्रः ॥ २५ ॥ फलं
नानाविधंस्वादु पक्वंशुद्धंसुशोधितम् ॥ मयासम
र्पितंरामसंगृहाणकृपाम्बुधे ॥ इतिफलसमर्पणमंत्रः
॥ २६ ॥ ॐ नागवल्लीदलंदिव्यंपूगीखदिरसंयुतम् ॥

वङ्कंसुरभिकृतस्वादुताम्बूलंप्रतिगृह्यतां ॥ इतितां
बूलमंत्रः ॥ २७ ॥ ॐ सुदीप्तंघृतकर्पूरपूरितंसप्तवर्ति
कं ॥ आर्तिक्यंदवेदेवशंसगृह्णीष्वमयार्पितं ॥ इत्या
र्तिक्यमंत्रः ॥ २८ ॥ ॐ चन्द्रसूर्यसमाज्योतीराका
तारासमन्वितं ॥ शब्दभेर्यैस्त्रिदेवेशसंगृहाणार्तिकंप्र
भो ॥ इतिपुनरार्तिक्यमंत्रः ॥ २९ ॥ यन्मयाभक्ति
योगेनपत्रंपुष्पंफलंजलं ॥ आवेदितंचनैवेद्यं तद्गृहा
णानुकंपया ॥ ३० ॥ ॐ आवृतांमृदुपुष्पाणांवनस्प
तिरसैर्युतां ॥ पुष्पांजलिंचदास्यामिसंगृहाणकृपा

निधे ॥ इतिपुष्पांजलिमंत्रः ॥ ३१ ॥ स्वर्णरत्नमयीं स्वामिन्तुलसीपुष्पसंयुतां ॥ दक्षिणाचैवदेवेशसंगृहाणमयार्पितां ॥ इतिदक्षिणासमर्पणमंत्रः ॥३२ ॥ श्रीरामगोविंदमुकुंदकृष्ण श्रीनाथविष्णोभगवन्मुरारे ॥ श्रीवल्लभानन्त जगन्निवास श्रीरामराजेन्द्र नमोनमस्ते ॥ इतिस्तुतिः ॥ ३३ ॥ ॐउपचारैःसमस्तैस्तुयत्पूजाचमयाकृता ॥ तत्सर्वंपूर्णतांयातुअपराधंक्षमस्वमे ॥ इतिअपराधक्षमापनमंत्रः ॥३४॥ ॐयानिकानिच पापानिजन्मान्तरकृतानिच ॥ तानितानिविनश्यं

तिप्रदक्षिणापदेपदे ॥ इतिप्रदक्षिणामंत्रः ॥ ३५ ॥ ॐ
त्राहिमांपापिनंघोरंधर्माचारविवर्जितं ॥ नमस्कारे
णदेवेशसंसारार्णवपातिनम् ॥ इतिनमस्कारमंत्रः
॥ ३६ ॥ त्वच्चरणाचलांभक्तिंत्वज्जनानांचसंगमः ॥
देहिरामकृपासिंधोमह्यंजन्मनिजन्मनि ॥ इतिप्रार्थ
नामंत्रः ॥ ३७ ॥ ॐ नीलांभोधरकांतिकायम
निशंवीरासनाध्यासिनं । मुद्रांज्ञानमयींदधानमप
रंहस्तांबुजंजानुनी ॥ सीतांपार्श्वगतांसरोरुहकरां
विद्युन्निभांराघवं । पश्यंतंमुकुटांगदादिविविधैः क

ल्पोज्ज्वलांगंभजे ॥ इतिध्यानं ॥ ३८ ॥ क्षीरसागरम
ध्येचशेषशय्यामहाशुभा ॥ तस्यांस्वपिहिदेवेशकु
रुनिद्रांजगत्पते ॥ इतिशयनमंत्रः ॥ ३९ ॥ ॐ त
च्छय्यासुप्तोविष्णुर्लक्ष्मीचरणसेवनं ॥ प्रणमंतिसु
राःसर्वेब्रह्माभृगुश्चनारदः ॥ इतिचरणसेवनमंत्रः॥४०॥
ॐ मंत्रहीनंक्रियाहीनंभक्तिहीनंपरात्परं ॥ पूजि
तोस्मिमयादेवपरिपूर्णंतदस्तुमे ॥ ४१ ॥ आवाहनंन
जानामिनजानामिविसर्जनं ॥ पूजांभक्तिंनजाना
मित्वंगतिःपरमेश्वर ॥ इतिविसर्जनमंत्रः ॥ ४२ ॥

इतिपंचरात्रोक्तपूजामंत्राः ॥ ॐ विमलायै नमः। उत्कर्षणायैनमः। ज्ञानायैनमः। क्रियायैनमः। योगायै नमः। ॐ प्रह्वयैनमः। सत्यायैनमः। ईशानायैनमः। अनुग्रहायैनमः। ॐ भगवतेनमः। सर्वात्मनेनमः। योगयोग्यपद्मपीठात्मनेनमः। ॐ रांरामायनमः स्वाहा। ॐ रांरींरूंरैंरौंरः। श्रीसीतायैस्वाहा। अग्नयेनमः। शंशार्ङ्गायनमः। शरेभ्योनमः। हनुमतेनमः। सुग्रीवायनमः। भरतायनमः। बिभीषणायनमः। लक्ष्मणायनमः। शत्रुघ्नायनमः। अंगदायनमः। जाम्बु

वतेनमः । सुराष्ट्रायनमः । अकोपायनमः । धर्म
पालायनमः । सुमंतायनमः । इंद्रायनमः । यमा
यनमः । निर्ऋतयेनमः । वसुधारणायनमः । वाय
वेनमः । सूर्यायनमः । अनंतायनमः । ब्रह्मणेनमः ।
शक्त्येनमः । त्रिशूलायनमः । षट्वदनायनमः । वज्रा
यनमः । शंखायनमः । चक्रायनमः । गदायनमः ।
पद्मायनमः । मूलमंत्रेण पूजांकृत्वा । पश्चात्षट्ल
क्षपुरश्चरणंजपेत् । दशांशेनहोमं । होमदशांशेनत
र्पणं । तर्पणदशांशेनमार्जनं । मार्जनदशांशेन

 वैष्णवब्राह्मणभोजनं॥अगस्त्यउवाच॥मंत्ररूपंप्रवक्ष्या 
 मिशृणुनारदतत्परः ॥ रकारादिमकारांतंमंत्रंषड्व 
र्णसंयुतं ॥ १ ॥ षडक्षरात्मकंमंत्रं तारकंब्रह्मवाचकं॥ 
राजेंद्रंराघवंरामं राजानंरघुनंदनम् ॥ २ ॥ राजी
वलोचनंवंदे रावणारिंरघूत्तमं ॥ रामचंद्रंरघुपतिंप्रप
द्येरावणांतकम् ॥ ३ ॥ माहिषंग्गुगलंप्रेष्ठं सर्वेषांचदि
वौकसां ॥ ब्रह्मविष्णुशिवानांचभवानीनांविशेषतः
॥ ४ ॥ पुष्करादीनितीर्थानिगंगाद्यास्सरितस्तथा ॥ 
वासुदेवादयोदेवावसंतितुलसीदले ॥ ५ ॥ शालग्राम

शिलायत्रयत्रद्वारावतीशिला ॥ उभयोः संगमोयत्र मुक्तिस्तत्रनसंशयः ॥ ६ ॥ ॐ जलबिंबायविद्महे नीलपुरुषायधीमहि ॥ तन्नोअंबुप्रचोदयात् ॐ जल बिंबायअंगुष्ठाभ्यांनमः ॥ विद्महेतर्जनीभ्यांनमः ॥ नीलपुरुषायमध्यमाभ्यांनमः ॥ धीमहिअनामिका भ्यांनमः ॥ तन्नोअंबुकनिष्ठिकाभ्यांनमः ॥ प्रचोदया त्करतलकरपृष्ठाभ्यांनमः । इतिकरन्यासः । ॐजल बिंबायहृदयायनमः ॥ विद्महेशिरसेस्वाहा ॥ नीलपुरु षायाशिखायैवषट् ॥ धीमहिकवचायहुं ॥ तन्नोअंबुने

त्राभ्यांवौषट् ॥ प्रचोदयातअस्त्रायफट् ॥ इतिअंगन्या
सः ॥ जंजंवंवंलंलं जलबिंबायनमः ॥ इतिजलगायत्री
मंत्रः ॥ इतिरामपटलंसंपूर्णम् ॥ अथऋग्वेदेपञ्चसं
स्काराः ॥ अथमुद्राविधिः ॥ श्रीरामपूजामध्येमुद्रांधार
येत् ॥ ॐश्रीरामंनत्वामुद्राः पञ्चतत्वतोयआत्मनो
निर्धारयेत् ॥ सश्रीरामस्यानुचरोभवति ॥ इतिऋ०प्र
थमःसंस्कारः । ॐयोवैलोकपावनींतुलसीकाष्ठजांमा
लिकांकण्ठेधारयाति सजीवन्मुक्तोभवति ॥ इतिऋ०
द्वितीयःसंस्कारः । ॐयोसौगोपीचन्दनवेणुपत्राकारमू

ध्र्वपुण्ड्रांतिलकं द्वादशपञ्चयथासंख्यमात्मनोनिर्धार
यति शंखचक्रांकितवस्त्राणिच सश्रीरामस्यानुचरोभ
वति स्मरतेततोभवति ॥ इतिऋ० तृतीयःसंस्कारः ॥
ॐ रांरींरूंरैंरौंरः ॐ योहंसः सोहं परमात्मानंस्मरते स
महीयान्सपरात्परेलोकेपूज्योभवति ॥ इतिऋ० चतु
र्थःसंस्कारः ॥ ॐ योसौनासाग्रेपरमात्मानंसत्यंनि
त्यंजपति ध्यानविशेषोभवति श्रीरामंसंध्यायति सम
हात्माभवति श्रीरामेसदामतिर्भवति ॥ इतिऋ० पंच
मःसंस्कारः ॥ तथाचागमे ॥ उद्यतोबतसहृदः पुरुषः

रा० सजीवन्मुक्तोभवति परमात्मनेसाप्रियोभवति कृत्य- प०
॥२७॥ कृत्योभवति ॥ इतिऋ०पंचसंस्कारान्कथितान्धृत
वान्महत्पुरुषः परमार्थपरमतत्वंसैवपरंधामानित्यं
प्राप्नोतितरणतारणोभवति । इतिऋग्वेदेश्रेष्ठागमेपारि
चाय्याग्नीये ॥ पुण्ड्रमुद्रातथानामममालामंत्रश्चपंचमः ॥
अभीहिपंचसंस्काराः पारमैकान्त्यहेतवः ॥ इतिऋ
ग्वेदेपंचसंस्काराः ॥१॥ अथसामवेदपंचसंस्काराः ॥अ
थपंचसंस्कारानतुभावयेत् ॥ ॐश्रीकृष्णनामांकित ॥२७॥
मुद्रांपावनीं यआत्मनोनिर्द्धारयति शंखचक्रांकितव

स्त्राणि चसपुण्यवान्श्रीकृष्णस्यानुचरोभवति ॥ इति
सा० प्रथमःसंस्कारः॥ ॐ योवैलोकपावनींतुलसीका
ष्ठजांमालिकांकंठेनिर्धारयति सजीवन्मुक्तोभवति स
लोकेपावनोभवति॥ इतिसा० द्वितीयः संस्कारः ॥ ॐ
योसौ गोपीचंदनेन वेणुपत्राकारमूर्ध्वपुंड्रं नासिकाद्र्ध
केशपर्यन्तं तिलकं द्वादशंपंचमंवा स्वात्मनोनिर्धारय
ति सपुण्यवान् श्रीकृष्णस्यानुचरो भवति सलोकेपू
ज्योभवति ॥ इतिसाम० तृतीयः संस्कारः ॥
ॐयोसौपरमात्मनः श्रीकृष्णस्य नामस्मरणेन मंत्रेणस

दाहृदिस्थंपरात्परंध्यायाति सयातिमहतोमहीयान्
सत्रैलोक्येपूज्योभवति ॥ इतिसा० चतुर्थः संस्कारः॥
ॐ योसौनामयज्ञेन परमात्मानं स्वरेणानित्यंजपति
ध्यानावस्थितः श्रीकृष्णयोध्यायाति समहापुरुषो
महतोमहीयान् सनित्यंगोविंदस्यसदृशः ॥ इतिसा०
पंचमः संस्कारः ॥ ॐ योसौपंचसंस्कारान्धृतवान्
समहत्पुरुषः सजीवन्मुक्तः परमात्मनस्साप्रियोभव
ति तस्यदर्शनात्पावनोभवतिसामवेदे कथितान्सं ॥२८॥
स्कारान्धृतवान् परमार्थपरायणः सवैपरमधामानि

त्यरूपोभवतितरणतारणोभवति ॥ इतिसामवेदेषट्
परीक्षास्तथाहिचागमे ॥ पुंड्रंमुद्रास्तथानाममालामं
त्रश्चपंचमः ॥ अमीहिपंचसंस्काराःपारमैकास्त्यहेत
वः ॥ इतिसामवेदपंचसंस्काराः ॥२॥ अथयजुर्वेदपंचसं
स्काराः ॥ संप्रदायानुसारेणयथाक्रमंप्रदर्श्यंते ॥ प्रथ
मंचयजुर्वेदेहिरण्यकेशिशाखायांऊर्ध्वपुंड्रं हरिपादा
कृतिआत्मनोनिर्धारयति मध्यच्छिद्रमूर्ध्वपुंड्रंयोधा
रयतिसपरस्यप्रियोभवति सपुण्यवान्समुक्तिभाग्भ
वति ॥ इतिय॰प्रथमःसंस्कारः ॥ धृतोर्ध्वपुंड्रोदरचक्र

 धारीविष्णुंपरंध्यायाति योमहात्मा स्वरेणमंत्रेण सदा 
 हृदिस्थितंपरात्परंसयाति महतोमहीयान् ॥ इतिय० द्वितीयः संस्कारः ॥ पशुपुत्रादिकान्सर्वान्गृहोपकरणानिच ॥ अंकयेत्शंखचक्राभ्यांनामकुर्यांच्चवैष्णवं ॥ इतिय० तृतीयसंस्कारः ॥ ॐ रांरामायनमःइतिमंत्रः ॥ अथर्ववेदेरामतापनीयोपनिषदिचतुर्थःसंस्कारः शंखचक्रधरोविद्वान्मालातुलसीजांधृतः । सजीवन्मुमुक्तः । इतिय० पंचमःसंस्कारः । तथाचागमे ॥ पुंड्रमुद्रा 
तथानाममंत्रोयागश्चपंचमः ॥ अमीहिपंचसंस्काराः

पारमैकांत्यहेतवः ॥ इतिय० पंचसंस्कृतोयःसवैष्णवः
नान्यथेतिभावः सरामस्यदासोभवति दासोहमस्मि
योयंस्मरेत् सतद्रूपोभवति कीटभृंगन्यायेनस्वस्वरू
पस्मरणात्तरातिशोकमात्मविद्ब्रह्मविद्ब्रह्मैवभवति ॥
अथ तुलसीभगवतोभेदाभावे यागस्थाने तुलसीधार
णंनाविरोधः ॥ इतिय० पंचसंस्काराः ३ अथर्ववेदे
पंचसंस्काराः ॥ संप्रदायानुसारेणयथाक्रमंप्रदर्श्यंते ॥
प्रथमंअथर्ववेदेआरक्तकेशिशाखायां ॥ ॐहरिपादा
कृतिंयोधारयतिसमहात्माविष्णुप्रियोभवति इति

अ० प्रथमः संस्कारः ॥ ॐ ऊर्ध्वंपुंड्रंमस्तकेधारयति समहात्मा दंडकमंडलुधौतवस्त्रंपवित्रं हृदयेभक्तिंगुरु वाक्यंचधारयति सजीवन्मुक्तोभवति ॥ इतिअ० द्वितीयः संस्कारः ॥ ॐ रामकृष्णहरिरितिषडक्षरमंत्रः ॥ इतिअ० तृतीयःसंस्कारः ॥ ॐ गंगास्नानंगंगोदकं रक्षावृत्तधारीइहाचार्य्यवान् निर्लोभीकंदमूलाहारः स त्रैलोक्येपूज्योभवति ॥ इतिअ० चतुर्थः संस्कारः ॥ ॐ सोहंहंसः तत्त्वमसीतिमहावाक्यं मंत्रंशुक्लवर्णंगर्ग ऋषिमाधवाचार्य्यैः सहविष्णुस्मरणंस्वाहा ॥ इति

अ० पंचमःसंस्कारः ॥ तथाचागमे ॥ ॐपुंड्रमुद्रात
थानाममालामंत्रस्तुपंचमः ॥ अभीहिपंचसंस्काराः
पारमैकांत्यहेतवः ॥ ४ ॥ इति अथर्ववेदेपंचसंस्का
रः ॥ केवलश्रीधारणानिषेधः ॥ श्रियमेकंतुयःकुर्यात्तद्वि
रेखातिलकंविना ॥ तस्यलक्ष्मीर्भवेद्दुष्टाधर्माणिश्च
विनश्यति ॥ १ ॥ तिलकहीनपूजनानिषेधः ॥ सश्री
तिलकहीनस्तु यःपूजयतिकेशवं ॥ निष्फलंपूजनं
तस्य ससंध्यावंदनादिकं ॥ २ ॥
इति श्रीरामपटलम् ॥

